यस्तु

इह स्थाने चित्तं निरवधि निधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरो नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥

इति श्लोकः विद्वत्कुलशिरोभूषणश्रीमद्बल्लदेवविद्याभूषणकृतटीकासम्बलितमुद्रित-षट्चक्रनिरूपणनामकपुस्तकान्तरे एकत्रिंशच्छ्लोकात् परमधिको दृश्यते स तु अस्मदुपजीव्यश्रीमत्कालीचरणशङ्कराभ्यामुपेक्षितत्वात् नैव पुस्तकाङ्गत्वेन निवेशितः किन्तु पुस्तकस्य समाप्त्यनन्तरं श्रीमद्बल्लदेवविद्याभूषणविरचितया टीकया सह सन्निवेशित इति ।

अपरञ्च विश्वोत्तारणकारणश्रीमन्महेश्वरवदनपङ्कजविनिर्गतकैवल्यकलिका-नामधेयतन्त्रस्य षट्चक्रनिरूपणात्मकद्वितीयपटलेन सार्द्धं सिद्धाचार्य्यवर्य्यश्रीमत्-पूर्णानन्दयतिविरचितषट्चक्रनिरूपणात्मकश्लोकसमूहानां प्रायशोऽभिन्नत्वेऽपि क्वचित् क्वचित् पाठवैषम्यस्य कैवल्यकलिकातन्त्रद्वितीयपटलटीकाकृच्छ्रीमद्विश्वनाथ-सूरिवाक्येनानुमीयमानत्वात् तत्प्रणीतषट्चक्रविवृत्याख्यया टीकयापि पुस्तक-मिदमलङ्कृतकलेवरमासीत् ।

किन्तु दुःखं पुनरेतदनुभूयते यद्बहुतरार्थव्ययं परिश्रमञ्च स्वीकुर्वद्भिः कुत्रापि कैवल्यकलिकातन्त्रं नोपलब्धं नापि दृष्टं सुतरामेव कैवल्यकलिकातन्त्रमल-भमानैरनन्योपायैरस्माभिः कैवल्यकलिकातन्त्रेण श्रीमत्पूर्णानन्दयतिविरचितस्य षट्-चक्रनिरूपणात्मकश्लोकसमूहस्य पाठादिवैषम्यं परिदर्शयितुमनीशैर्मूकैर्भूयते इति ।

अन्यच्च आर्य्यधर्म्मावलम्बिनां सर्व्वेषामेव श्रीगुरुराराधनीय इति पूर्व्व-पूर्व्वाचार्य्यशिष्टाचारपरम्पराप्राप्तत्वात् जगद्गुरुरपीश्वरः श्रीगुरुपादुकापञ्चक-स्तोत्रव्याजेन श्रीगुरोः स्वीयाराध्यतां दर्शयन् सर्व्वानुपदेष्टुं पादुकापञ्चकं नाम स्तोत्रमकार्षीत् तदपि विद्वत्प्रवरश्रीमत्कालीचरणविरचितया गूढभावार्थप्रकाशिकया अमलाख्यटीकया षट्चक्रविवृतेः प्राक् ग्रन्थेऽस्मिन् सन्निवेशितमिति ।

सम्पादकस्य निवेदनम् ।

---

Printed by J. R. Aria at the Vasanta Press, Adyar, Madras.